अत्रोपपत्तिः । स्फुटार्कोदयतश्चन्द्रसाधनार्थं रविभुजफलसंस्कार आनीत । तदानयनोपपत्तिश्च 'भाप्त च भुजफल लवे-' इत्यस्य सह साधस्य वासनाया मत्कृतोपपत्तिश्चेलोक्या । तज्जनचन्द्रतस्तिथिर्भवति । अतो मध्यमतिथौ रविफलोनचन्द्रफलं द्वादशभिर्विभज्य संस्कार्यम् । अतो रविफलव्यस्तसंस्कृतचन्द्रफलं द्वादशहृतमित्युपपद्यते ॥ २० ॥

इदानीं केन्द्रत एव तिथिसंस्कारार्थाय घटिकात्मकं मन्दफलमाह ।

पञ्चेषुपञ्चयुगगुण-
यमचन्द्राश्चन्द्रकेन्द्रजफलानि ।
द्विकुयुगखरहिते
तथा सूर्ये ॥ २१ ॥

(द्विद्विद्विद्विकुभूतान्युच्चविरहिते तथा सूर्ये ॥ २१ ॥)*

एकस्मिन् पादेऽष्टाविंशतिनक्षत्रात्मककेन्द्रसङ्ख्या ७ तत्र प्रतिनक्षत्र चन्द्रमन्दफलघटीभवान्यन्तरखण्डानि पञ्चेषुपञ्चेत्यादीनि । एवं सूर्ये स्वोच्चविरहिते तथैव चन्द्रकेन्द्रवत केन्द्रे क्रियमाणे प्रतिनक्षत्र रविमन्दफलघटीभवान्यन्तरखण्डानि द्विद्विद्वीत्यादीनि ज्ञेयानि ।

अत्रोपपत्तिः । एकस्मिन् चक्रे २८ चन्द्रकेन्द्रभानि पूर्व कल्पितानि । अतो वृत्तपादे नवतिभागात्मके सप्त भानि । एकैकस्मिन् भे स्वल्पान्तरात् सत्र्यंशद्वादशभागा अत ।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| भानि | = १ | २ | ३ | ४ | ५ | ६ | ७ |
| भागा | = १३ | २६ | ३९ | ५२ | ६५ | ७८ | ९० |
| चन्द्रज्या | = ३४ | ६५ | ९४ | ११७ | १३५ | १४६ | १५० |
| मन्दफलकला | = ६८ | १३० | १८८ | २३४ | २७० | २९२ | ३०० |
| द्वादशहृता घटिका | = ५।४० | १० ५० | १५।४० | १९।३० | २२।३० | २४ २० | २५।० |
| खण्डानि | = ५ ४० | ५।१० | ४।५० | ३।५० | ३।० | १।५० | ०।४० |

* अयमेवार्यापाठः समीचीनः ।

आचार्येणैतेषां स्थाने स्वल्पान्तरात् क्रमेण—५ । ५ । ५ । ४ । ३ । २ । १ सा अन्तररूपा निरवयवघटिका गृहीताः । अत्र प्रथमस्थाने महती स्थूलता तत्र वस्तुतोऽर्धाधिके रूपं ग्राह्यमिति नियमेन षड्घट्यः समुचिताः ।

एवं तत्कन्दज्याखण्डतः क्रमेण रविमन्दफलकलाः ‘ स्वाष्टाशेना सवितु ’रित्याचार्योक्तितः ।

| | | | | | | |
|---|---|---|---|---|---|---|
| मंफल = ३० | ५७ | ८२ | १०२ | ११८ | १२८ | १३१ |
| द्वादशहृता घट्य = २।३० | ४।४५ | ६।५० | ८।३० | ९।५० | १०।४० | १०।५५ |
| अन्तराणि = २।३० | २।१५ | २।५ | १।४० | १।२० | ०।५० | ०।१५ |

आचार्येणैतेषां स्थाने स्वल्पान्तरात् क्रमेण—२ । २ । २ । २ । १ । १ । ० सा अन्तरात्मका निरवयवघटिकाः पठिता. ॥ २१ ॥

इदानीं तिथिसाधनमाह ।

अर्कोनचन्द्रलिप्ताः खयमस्वरभाजिताः फलं तिथयः ।
गतगम्ये षष्टिगुणे भुक्त्यन्तरभाजिते घटिकाः ॥ २२ ॥

स्पष्टार्थम् । स्पष्टाधिकारेण स्फुटोपपत्तिश्च ॥ २२ ॥

इदानीं भयोगसाधनमाह ।

भान्यश्विन्यादीनि ग्रहलिप्ताः खखवसूद्धृता लब्धम् ।
भुक्तिहृते गतगम्ये दिवसाः षष्ट्याहते घटिकाः ॥ २३ ॥
रविचन्द्रयोगलिप्ताः खखवसुभिर्भाजिताः फलं योगः ।
गतगम्ये षष्टिगुणे गतियोगविभाजिते घटिकाः ॥ २४ ॥

स्पष्टार्थम् । स्पष्टाधिकारस्य ६१ श्लोकगमा प्रथमार्या । द्वितीयार्यं तत्रैव टीका विलोक्या ॥

इदानीं करणानयनमाह ।

व्यर्केन्दुकला भक्ताः खरसगुणैर्लब्धमूनमेकेन ।
चरकरणानि ववादीन्यगताच्छेषात् तिथिवदन्यत् ॥ २५॥

अगताद्भोग्यात् । शेषाद्गतात् । अन्यद् भुक्तभोग्यघटिकादिकं तिथिवत् साध्यम । शेषं स्पष्टार्थम् ॥ २५ ॥

**शशिना त्रिपैरर्यमैश्चतुरब्धिभि-**
**रन्वितं भवति बुधशीघ्रम् ॥ २७ ॥**

(शशिना १ जिने २४ शराब्धिभि-४५ रङ्कै पड्वह्निभिर्हताब्दात् ।
शशिना १ द्विपे ८ सुरे ३३ श्चतुरब्धिभि ४४ रन्वित बुधशीघ्रम् ॥ २७ ॥)*

अत्रोपपत्ति । भौमवद्बुधशीघ्रविकलामितिरेकस्मिन् सौरवर्षे

$$= \frac{\text{३ बुशीभ}}{\text{१००००}} = \frac{\text{३} \times \text{१७९३६९९८९८४}}{\text{१००००}} = \frac{\text{५३८१०९९६९५२}}{\text{१००००}} = \text{५३८१०९९}''$$

$\frac{\text{६९५२}}{\text{१००००}}$ = ५३८१०९९″ + ४१‴ = ८९६८४′ । ५९″ । ४१‴ = १४९४° । ४४′ । ५९″ । ४१‴ = रा ४९ । २४° । ४४′ । ५९″ । ४१‴ = रा १ । २४° । ४४′ । ५९″ । ४१‴ ।

आचार्योक्तलिखितसङ्ख्याभिर्विलोमेन कल्पे बुधशीघ्रभगणा १०९३७०७२००० एते सिध्यन्ति ।

अत्र भौमसाधनवत् कलिगताब्देभ्य ३०२९ एभ्यो मध्यमाधिकारे पाठपठितभगणेभ्यश्च विकलात्मकबुधशीघ्रम् ।

$$= \frac{\text{बुभ} \times \text{३ गत}}{\text{१००००}} = \frac{\text{१७९३६९९८९८४} \times \text{१११८७}}{\text{१००००}} = \text{२००६९१२०८६३}'' \ \frac{\text{४०७८}}{\text{१००००}}$$

= रा १ । १२° । २६′ । ३″ अथ कल्यादिबुधशीघ्रेण रा ११ । २७° । २४′ । २९″

नेन युतो जात क्षेप. = १ । ९° । ५०′ । ३२″

आचार्योक्तक्षेप = १ । ८ । ३३ । ४४

अन्तरम् = १ । १६ । ४८

इदानीं गुरोरानयनमाह ।

**रूपेण १ खेन० कुयमै-२१ रङ्कै-९ र्नवभिश्च करणाब्दाः ।**
**गुणिता युक्ता वेदैः कुयमैस्त्रियमैश्च भवति गुरुः ॥ २८॥**

(रूपेण १ खेन ० कुयमै २१ रखैरङ्कैश्च करणाब्दा. ।)†

अत्रोपपत्ति । पूर्ववद्गुरुविकलामितिरेकस्मिन् सौरवर्षे

---

* अय पाठ साधु ।

† अय पाठ साधु ।

$= \frac{३\ \text{गुभ}}{१००००} = \frac{३ \times ३६४२२६४५५}{१००००} = \frac{१०९२६७९३६५}{१००००} = १०९२६७'' \frac{९३६५}{१००००}$

$= १०९२६७'' + ६'$ स्वल्पान्तरात् $= १८२१' ।\ ७'' ।\ ६''' = ३०^{\circ} ।\ २१ ।$ $७'' ।\ ६'' = \text{रा}१ ।\ ०^{\circ} ।\ २१' ।\ ७'' ।\ ६'''$

आचार्योक्तसंख्याभिर्विलोमेन कल्पे गुरुभगणा ३६४२२०५०० इमे सिध्यन्ति ।

मध्यमाधिकारे पाठपठितगुरुभगणेभ्य कलिगताब्देभ्य ३०२९ एभ्यो मे ।मसाधनवद्गुन्धारम्भे त्रिकलात्मको

$\text{गुरु} = \frac{\text{गुभ} \times ३\ \text{गव}}{१००००} = \frac{३६४२२६४५५ \times १११८७}{१००००} = ४०७४६०१३५'' \frac{२०८५}{१००००}$

$= \text{रा}४ ।\ २३^{\circ} ।\ २२' ।\ १५''$ अथ कल्यादिगुरुणा $\text{रा}११ ।\ २९^{\circ} ।\ २७' ।\ ३६''$

एतेन युतो जात क्षेप $= ४ ।\ २२ ।\ ४९ ।\ ५१$

आचार्योक्त क्षेप $= ४ ।\ २१ ।\ २३ ।\ ००$

अन्तरम् $= १ ।\ २६ ।\ ५१$

इदानीं शुक्रशीघ्रानयनमाह ।

**शैलैस्तिथिभी रुद्रैर्यमविषयैः सागरैर्गुणिताः ।**
**वसुभिरनिलैर्जिनैः षड्गुणैश्च युक्तं भृगोः शीघ्रम् ॥ २६ ॥**

अत्रोपपत्तिः । पूर्ववदेकस्मिन सौरवर्षे शुक्रशीघ्रोच्चविकलामिति

$= \frac{३\ \text{शुशीभ}}{१००००} = \frac{७०२२३८९४९२ \times ३}{१००००} = \frac{२१०६७१६८४७६}{१००००} = २१०६७१६'' \frac{८४७६}{१००००}$

$= २१०६७१६'' + ५१''' = ३५१११' ।\ ५६'' ।\ ५१''' = ५८५^{\circ} ।\ ११ ।\ ५६'' ।$ $५१'' = \text{रा}१९ ।\ १५^{\circ} ।\ ११' ।\ ५६'' ।\ ५१'' = \text{रा}७ ।\ १५^{\circ} ।\ ११' ।\ ५६'' ।\ ५१''$

आचार्योक्तसंख्याभिर्विलोमेन कल्पे शुक्रशीघ्रभगणा ७०२२३७३५५६ इमे सिध्यन्ति ।

मध्यमाधिकारे पाठपठितेभ्य शुक्रशीघ्रभगणेभ्य कलिगताब्देभ्य ३०२९ एभ्यो भौमसाधनवद्गुरुन्धारम्भे शुक्रशीघ्रविकलामिति

$= \frac{\text{शुभ} \times ३\ \text{गव}}{१००००} = \frac{७०२२३८९४९२ \times १११८७}{१००००} = ७८५५९४७१२४'' \frac{७००४}{१००००}$

= ८रा । ७° । ३२′ । ४″ । अयं कल्पादिशुक्रयोगेन ११रा । २८° । ४२′ । १४″

अनेन युतो जातः क्षेपः = ८रा । ६° । १४′ । १८

आचार्योक्तक्षेपः = ८ । ५ । २४ । ३६

अन्तरम् = ० । ४९ । ४२

इदानीं शन्यानयनमाह ।

**शून्येन द्वादशभिर्द्वादशभिः खेषुभिस्त्रयोदशभिः ।**
**गुणिता युता रसैरब्धिभिस्त्रिविषयैर्दशभिरार्किः ॥३०॥**

अत्रोपपत्तिः । पूर्ववदेकस्मिन् सौरवर्षे शनिविकलामितिः = $\frac{\text{३ भग}}{\text{१००००}}$

= $\frac{\text{१४६५६७२९८} \times \text{३}}{\text{१००००}}$ = $\frac{\text{४३९७०१८९४}}{\text{१००००}}$ = ४३९७०″ $\frac{\text{१८९४}}{\text{१००००}}$ = ४३९७०″ + ११‴

= ७३२′ । ५०″ । ११‴ = १२° । १२′ । ५०″ । ११‴ = ०रा । १२° । १२′ । ५०″ । ११‴

आचार्योक्तसंख्याभिर्विलोमेन कल्पे शनिभगणा १४६५६७२९८ इति सिध्यन्ति ।

शकारम्भे कलिगताब्दाः = ३१७९ + ५५० = ३७२९ अतः शनि-विकलात्मक. = $\frac{\text{१४६५६७२९८} \times \text{१२} \times \text{३०} \times \text{६०} \times \text{६०} \times \text{३७२९}}{\text{४३२००००००००}}$

= $\frac{\text{१४६५६७२९८} \times \text{३} \times \text{३७२९}}{\text{१००००}}$

= $\frac{\text{१४६५६७२९८} \times \text{१११८७}}{\text{१००००}}$ = १६३९६४८३६″ $\frac{\text{६४३}}{\text{१००००}}$

इदानीं राहोरानयनमाह।

**गगनेन नवचन्द्रैः कुयमैः रसाब्धिभिः संवरेण हृताः।**
**रुद्रैः खवेदैर्युक्ता राश्यादिकः पातः ॥ ३१ ॥**

(गगनेन नन्दचन्द्रैः कुयमै रसाब्धिभिरम्बरेण हृताः।
रुद्रैर्विश्वखवेदैर्युक्ता राश्यादिकः पातः ॥ ३१ ॥)*

अत्रोपपत्तिः। पूर्ववदेकस्मिन् सौरवर्षे चन्द्रपातविकलामितिः

$= \frac{\text{३ पाभ}}{\text{१००००}} = \frac{\text{२३२३१११६८} \times \text{३}}{\text{१००००}} = \frac{\text{६९६९३३५०४}}{\text{१००००}} = \text{६९६९३}'' \frac{\text{३५०४}}{\text{१००००}}$

$= \text{६९६९३}'' + \text{२१}''' = \text{११६१}' \text{ । } \text{३३}'' \text{ । } \text{२१}''' = \text{१९}^{\circ} \text{ । } \text{२१}' \text{ । } \text{३३}'' \text{ । } \text{२१}''' = \overset{\text{रा}}{\text{०}} \text{ । } \text{१९}^{\circ} \text{ । } \text{२१}' \text{ । } \text{३३}'' \text{ । } \text{२१}'''$

आर्यभटानुसारेण $\frac{\text{३ पाभ}}{\text{१००००}} = \frac{\text{२३२२२६०००} \times \text{३}}{\text{१००००}} = \frac{\text{६९६६७८०००}}{\text{१००००}}$

$= \text{६९६६७}'' \frac{\text{८०००}}{\text{१००००}}$

$= \text{६९६६७}'' + \text{४८}''' = \text{११६१}' \text{ । } \text{७}'' \text{ । } \text{४८}'''$

$= \text{१९}^{\circ} \text{ । } \text{२१}' \text{ । } \text{७}'' \text{ । } \text{४८}''' = \overset{\text{रा}}{\text{०}} \text{ । } \text{१९}^{\circ} \text{ । } \text{२१}' \text{ । } \text{७}'' \text{ । } \text{४८}'''$

अत्रापि भौमसाधनवद्ग्रन्थारम्भे कलिगताब्दत पातविकलाः

$= \frac{\text{पाभ} \times \text{कगय}}{\text{१००००}} = \frac{\text{२३२३१११६८} \times \text{१११८७}}{\text{१००००}} = \text{२५९८८६५०३}'' \frac{\text{६४१६}}{\text{१००००}}$

$= \overset{\text{रा}}{\text{६}} \text{ । } \text{१०}^{\circ} \text{ । } \text{४१}' \text{ । } \text{४३}''$ । अथ कल्यादिपातेना $\overset{\text{रा}}{\text{५}} \text{ । } \text{३}^{\circ} \text{ । } \text{१२}' \text{ । } \text{५८}''$

नेन युतो जातः क्षेपः $= \overset{\text{रा}}{\text{११}} \text{ । } \text{१३}^{\circ} \text{ । } \text{५४}' \text{ । } \text{४१}''$

आचार्योक्तक्षेपः $= \text{११ । १३ । ४० । ००}$

अन्तरम् $= \text{१४ । ४१}$

इदानीं ग्रहानयने विशेषमाह।

**सर्वाणि स्थानानि क्रमतः स्वहरैर्नयेदुपरि।**
**एवं रव्यब्दान्ते ग्रहभुजा मध्यमाः स्युस्ते ॥ ३२ ॥**

* अयं पाठः साधुः।

सर्वाण्यपि राश्यादीनि स्थानानि क्रमतः स्वहरैरुपरि नयेत्। प्रति विकलाः षष्टिहृताः फलं विकलासु योज्यम्। विकला षष्टिहृता, फलं कलासु योज्यम्। एवं स्वहरैरुपरि नयेदित्यर्थः। शेषं स्पष्टार्थम् ॥ ३२ ॥

इदानीं प्रकारान्तरेण भौमादीनाह। तत्रादौ भौमानयनमाह।

**पृथगर्को दशगुणितो वसुशरचन्द्रैर्हृतः फलेन युतः।**
**दलितो भौमध्रुवके क्षेप्यः स्यान्मध्यमो भौमः ॥ ३३ ॥**

स्पष्टार्थम्।

अत्रोपपत्तिः। कल्पे रविभगणाः = ४३२००००००००।

भौमभगणाः = २२९६८२८५२२।

$$\text{अनयोर्निष्पत्तिः} = \frac{२२९६८२८५२२}{४३२००००००००} = \frac{११४८४१४२६१ \times २}{२१६००००००० \times २}$$

$$= \frac{११४८४१४२६१}{२१६०००००००}$$

$$= \cfrac{१}{१ + \cfrac{१}{१ + \cfrac{१}{७ + \cfrac{१}{२ + \cfrac{१}{१ + \cfrac{१}{१ + \cfrac{१}{५ + \cfrac{८९९६.८}{४७३६६९८}}}}}}}}$$

अस्मादासन्नमानानि

$\frac{१}{१}, \frac{१}{२}, \frac{८}{१५}, \frac{१७}{३२}, \frac{२५}{४७}, \frac{४२}{७९}, \frac{२३५}{४४२},$

आचार्येणेदं $\frac{२३५}{४४२}$ मानं गृहीतम्। अनेनार्को गुण्यो भौमः स्यात्। ततो भौम $= \frac{२३५}{४४२} \times \text{रवि} = \frac{१}{२}\text{रवि} \times \frac{२३५}{२२१} = \frac{१}{२}\text{रवि}\left(१ + \frac{१४}{२२१}\right)$

$$= \frac{१}{२}\text{रवि}\left(१ + \frac{१४ \times १०}{२२१०}\right) = \frac{१}{२}\text{रवि}\left(१ + \frac{१०}{१५८}\right) \text{ स्वल्पान्तरात्।}$$

अत उपपन्नम्। शेषवासना सुगमा ॥ ३३ ॥

इदानीं बुधानयनमाह ।

**चतुराहतोऽङ्घ्रिगुणितः पृथक् च सप्ताहतोऽङ्घ्रिधृतिभक्तः।**
**फलसंयुतो विधेयो ज्ञचलभुवको ज्ञशीघ्रं स्यात् ॥ ३४ ॥**

स्पष्टार्थम् ।

अत्रोपपत्तिः । कल्पबुधशीघ्रभगणाः = १७९३६९९८९८४

रविभगणाः = ४३२००००००००

$$\text{तयोर्निष्पत्ति} = ४ + \frac{६५६९९८९८४}{४३२००००००००}$$

$$\text{अथ } \frac{६५६९९८९८४}{४३२००००००००} = \frac{१६४२४९७४६ \times ४}{१०८००००००० \times ४} = \frac{८२१२४८७३ \times २ \times ४}{५४०००००००० \times २ \times ४}$$

$$= \frac{८२१२४८७३}{५४००००००००}$$

$$= \cfrac{१}{६ + \cfrac{१}{१ + \cfrac{१}{१ + \cfrac{१}{२ + \cfrac{१}{१ + \cfrac{१}{४ + \cfrac{१}{२ + \cfrac{४०९६०}{१०६९४५१}}}}}}}}$$

अत आसन्नमानानि $\frac{१}{६}, \frac{१}{७}, \frac{२}{१३}, \frac{५}{३३}, \frac{७}{४६},$

$\frac{७}{४६} = \frac{२८}{१८४}$ इदमाचार्येण गृहीतम् । ततो निष्पत्तिमानम् $= ४ + \frac{७ \times ४}{१८४}$

अनेन रविगुणो बुधशीघ्रमानम् $= ४र + \frac{७ \times ४र}{१८४}$ ।

शेषवासना चातिसुगमा ॥ ३४ ॥

इदानीं गुरुशनिराह्वानयनमाह ।

**सप्तहतस्त्रिघ्नसुहृतो गुरुः शनिर्द्विगुणितो नवेषुहृतः ।**
**दिग्गुणितो रसधृतिहृत् राहोर्लिप्तासुकृतलिप्तः ॥ ३५ ॥**

अत्रोपपत्तिः । पूर्ववत् $\frac{गुभ}{रभ} = \frac{३६४२२६४५५}{४३२००००००००}$

$$= \cfrac{१}{११ + \cfrac{१}{१ + \cfrac{१}{६ + \cfrac{१}{५ + \cfrac{४६९६२८५}{९२०४२३५}}}}}$$

अत आसन्नमानानि $\frac{१}{११}, \frac{१}{१२}, \frac{७}{८३}$ ... ...

$\frac{७}{८३}$ इदमाचार्येण गृहीतम् ।

$$\frac{ग्रम}{रभ} = \frac{१४६४६९२९८}{४३२००००००००} = \cfrac{१}{२९ + \cfrac{१}{२ + \cfrac{७४३०५८२}{९६५४८३५८}}}$$

अत आसन्नमानानि, $\frac{१}{२९}, \frac{२}{५९}$ ... ...

$\frac{२}{५९}$ इदमाचार्येण गृहीतम् ।

एवम् । $$\frac{शं \cdot पा भ}{रभ} = \frac{२३२३११९६८}{४३२००००००००} = \cfrac{१}{१८ + \cfrac{१}{१ + \cfrac{१}{१ + \cfrac{१}{२ + \cfrac{४९३८६३४}{४४४८६९२४}}}}}$$

अत आसन्नमानानि

$\frac{१}{१८}, \frac{१}{१९}, \frac{२}{३७}, \frac{५}{९३}$ ... ...

$\frac{५}{९३} = \frac{१०}{१८६}$ इदमाचार्येण गृहीतम् । अत उपपद्यते सर्वम् ॥ ३५ ॥

इदानीं शुक्रचलानयनमन्येषां चलं चाह ।

**त्रिगुणो दलितः स्वद्वादशांशयुक्तः सितचलं ध्रुवं स्यात् ।**
**तात्कालिकं चलं स्याद्रविरन्येषां ज्ञशुक्रौ स्वः ॥ ३६ ॥**

अन्येषां भौमगुरुशनीनां रविरेव तात्कालिकं चलं शीघ्रोच्चमस्ति । तथा रविरेव मध्यमौ बुधशुक्रौ स्तः । शेषं स्पष्टम् ।

अत्रोपपत्तिः । पूर्ववत् $\frac{\text{शुभोभ}}{\text{रभ}} = \frac{७०२२३८९४९२}{४३२०००००००}$

$$= १ + \cfrac{१}{१ + \cfrac{१}{१ + \cfrac{१}{१ + \cfrac{१}{२ + \frac{१२६९५६३८}{५३०८३१५३५}}}}}$$

अत आसन्नमानानि

$\frac{१}{१}, \frac{२}{१}, \frac{३}{२}, \frac{५}{३}, \frac{१३}{८}$

$\frac{१३}{८} = \frac{१३ \times ३}{८ \times ३} = \frac{३९}{२४} = \frac{३६}{२४} + \frac{३}{२४} = \frac{३}{२} + \frac{३}{२ \times १२}$ इदमासन्नं

गृहीतम् । ततो जातं सितचलम् $= र\left(\frac{३}{२} + \frac{३}{२ \times १२}\right)$

$= \frac{३र}{२} + \frac{३र}{२} \cdot \frac{१}{१२}$ अत उपपन्नं सितचलानयनम् ।

शेषवासना स्फुटा ॥ ३६ ॥

इदानीं भौमादीनां मन्दोच्चांशानाह ।

**मन्दांशा नगरवयो भगमाः खनगेन्दवः खनन्दाश्च ।**
**यमतत्त्वानि तदूनान्मध्याज्ज्या सूर्यवत् साध्या ॥ ३७ ॥**

भौमादीनां मन्दांशा मन्दोच्चांशाः क्रमेण १२७° । २२०° । १७०° । ९०° । २५२° । एते सन्ति । तदूनान्मध्याद्ग्रहात् सूर्यवज्ज्या साध्या । मन्दोच्चेन हीनो मध्यो मन्दकेन्द्रम् । सूर्यकेन्द्रवत् तस्य गतगम्यखण्डात् केन्द्रभुजज्या साध्येत्यर्थः ।

अत्रोपपत्तिः । मन्दोच्चानामल्पगतित्वात् सुखार्थं बहुकालोपयोगित्वात् स्वसमये स्थिरांशाः पठिताः । शेषवासना चातिसुगमा ॥ ३७ ॥

इदानीं भौमादीनां मन्दफलानयनमाह ।

**रदगुणिता सप्तहृता**
**कुजस्य सौम्यस्य नगगुणा त्रिहृता ।**
**द्विगुणा हि फलं सूरे-**
**र्द्विगुणाग्निविभाजिता स्फुजितः ॥ ३८ ॥**
**त्रि*गुणा त्रिंशद्भक्ता रविजस्य फलस्य मन्दफललिप्ताः ।**
**मन्दफलयुतोन स्वशीघ्रोच्चाच्छोधयेन्मध्यम् ॥ ३९ ॥**

स्पष्टाधिकारोक्तमन्दपरिधिना भौमादीनां स्वल्पान्तरात् परममन्दफलकला. ।

भौ = ६७०′ । बु = ३६२′ । गु = ३१४′ । शु = १०५′ । श = ४७६′

ततो यदि त्रिज्यया परममन्दफलकलास्तदा केन्द्रज्यया किम् ।

जाता मन्दफलकला

$$भौ = \frac{६७० \text{ ज्याके}}{१५०} = \frac{६७ \text{ ज्याके}}{१५} = \frac{६७ \times ३२ \text{ ज्याके}}{१५ \times ३२} = \frac{६७ \times ३२ \text{ ज्याके}}{४८०}$$

$$= \frac{३२ \text{ ज्याके}}{\frac{४८०}{६७}} = \frac{३२ \text{ ज्याके}}{७}$$ स्वल्पान्तरात् ।

$$बु = \frac{३६२ \text{ ज्याके}}{१५०} = \frac{७ \text{ ज्याके}}{३}$$ स्वल्पान्तरात् ।

$$गु = \frac{३१४ \text{ ज्याके}}{१५०} = २ \text{ ज्याके}$$ स्वल्पान्तरात् ।

$$शु = \frac{१०५ \text{ ज्याके}}{१५०} = \frac{२ \text{ ज्याके}}{३}$$ ।

$$श = \frac{४७६ \text{ ज्याके}}{१५०} = ३ \text{ ज्याके} + \frac{२६ \text{ ज्याके}}{१५०} = ३ \text{ ज्याके} + \frac{\text{ज्याके}}{६}$$ स्वल्पान्तरात् ।

इदानीं स्फुटग्रहार्थं संस्कारमाह ।

**तस्माच्छीघ्रफलदलं स्वमृणं वा मन्दसंस्कृते† दद्यात् ।**
**प्राग्वन्मन्दफलमतः सकलं मान्दग्रहात् कुर्यात् ॥ ४० ॥**

* (त्रिगुणार्धयुक्ता)
† (मन्दवत्)

तस्मात् पृथक् सिताद्विशीघ्रोच्चविवर्जितात् (स्फुटं केन्द्रम्।)
तस्मात् शीघ्रफलेन* संस्कृतः स्फुटो जायते स्पष्टः॥ ४१॥

मन्दफलयुतोनं मध्यं शीघ्रोच्चाच्छोधयेदेवं शीघ्रकेन्द्रं भवति। तस्माच्छीघ्रफलं कृत्वा तदर्धं स्वं वा ऋणं यथागतं मन्दसंस्कृते मन्दफलसंस्कृते मध्यग्रहे दत्त्वा तं मध्यग्रहं प्रकल्प्यातः प्राग्वत्पुनर्मन्दफलं साध्यं तद्यथागतं सकलं सम्पूर्णं मध्यग्रहे देयम्। एवं गणको मन्दग्रहं मन्दस्पष्टं कुर्यात्। तस्मात् पृथक् स्थापितात् शुक्रादिशीघ्रोच्चविवर्जितात् स्फुटं केन्द्रं द्वितीयं शीघ्रकेन्द्रं कुर्यात्। तस्मात् पुनः शीघ्रफलं साध्यम्। तेन संस्कृतमन्दः पृथक् स्थापितो मन्दस्पष्टश्च संस्कृतः। एवं स्पष्टो ग्रहो जायते। लाघवेन शीघ्रफलसाधनार्थमग्रे [illegible] वक्ष्यति।

अत्रोपपत्तिः। उपलब्धिरेव॥ ४०-४१॥

इदानीं लाघवेन शीघ्रफलानयनार्थं पिण्डमाह।

भागीकृतचलकेन्द्रे त्रिगुणे स्वाग्न्युद्धृते फलं पिण्डः।
षड्राश्यधिके चक्राद् विशोध्य शेषेण पिण्डः स्यात्॥ ४२॥

(भागीकृतचलकेन्द्रे त्रिगुणे स्वाब्धुद्धृते फलं पिण्डः।)†

चलकेन्द्रस्य भागाः कर्त्तव्याः। केन्द्रे षड्राश्यधिके चक्रात् राशिद्वादशकात् केन्द्रं विशोध्य शेषस्य भागाः कर्त्तव्याः। भागास्त्रिगुणाः स्वाब्धि ४० हृताः फलं फलसमो गतपिण्डः स्यात्।

अत्रोपपत्तिः। उच्चनीचयोः शीघ्रकर्णस्य वैलक्षण्यादाचार्येण केन्द्रषड्राशिमध्ये सत्र्यंशत्रयोदशभागवृद्ध्या भौमादीनां चलकेन्द्राणि प्रकल्प्य तेभ्यः शीघ्रफलान्यानीय तद्भागा नवगुणाः पिण्डाङ्काः पठिताः। ते षड्राशिमध्ये सार्धत्रयोदश पिण्डाङ्का भवन्ति। त्रयोदश चतुर्दशपिण्डयोर्मध्ये च केन्द्रान्तरं $\frac{९}{२}$ अस्य दलं $\frac{१}{२}$ मित्यस्तीति चिन्त्यम्। इष्टकेन्द्रभागेषु कियन्तः पिण्डाङ्का गता एतदर्थमनुपातः। यदि $\frac{९०}{२}$ केन्द्रभागैरेकः

* संस्कृतमन्दश्च जायते स्पष्टः। अयं पाठः साधुः।

† अयं पाठः साधुः।

पिण्डस्तदेष्टकेन्द्रांशैः किम् । जातो गतपिण्डः । शेषफलानयनार्थमग्रे वक्ष्यति ।

इदानीं शेषसंबन्धि पिण्डावयवानयनमाह ।

**पिण्डान्तरेण गुणिते शेषे खाब्ध्युद्धृते क्रमाद्देयम् ।**
**उत्क्रमविधौ विशोध्यं गतपिण्डे शीघ्रफलमेतत् ॥ ४३ ॥**

शेषे पिण्डान्तरेण गतैष्यपिण्डयोरन्तरेण गुणिते खाब्धि ४० हृते फलं क्रमादुपचयात् गतपिण्डत एष्यपिण्डेऽधिके गतपिण्डे देयम् । उत्क्रमविधावपचयाद्गतपिण्डत एष्यपिण्डेऽल्पे फलं गतपिण्डे विशोध्यं तदेतत् संस्कृतं शीघ्रफलं शीघ्रफलसम्बन्धि पिण्डमानं भवेत् ।

अत्रोपपत्तिः । यदि चत्वारिंशत्समेन त्रिगुणशेषेण गतैष्यपिण्डयोरन्तरं लभ्यते तदाऽभीष्टत्रिगुणशेषेण किमित्यनुपातेन स्फुटा । धनर्णोपपत्तिश्चातिसुगमा ॥ ४३ ॥

इदानीं विशेषमाह ।

**पिण्डाभावे त्रिकलं गुणयेदाद्येन पिण्डकेन ततः ।**
**गण्यन्ते तु खवेदैस्तदेव फलमत्र बोद्धव्यम् ॥ ४४ ॥**

चलकेन्द्रे त्रिगुणे खाब्धिहृते यदि फलं शून्यं तदा पिण्डाभावः स्यात् । तस्मिन् पिण्डाभावे त्रिकलं शेषमाद्येन पिण्डेन गुणयेत् ततो गुणनफलानि खवेदै ४० र्गण्यन्ते विभज्यन्ते । अत्र यत् फलं तदेव शीघ्रफलसंबन्धि पिण्डमानं बोद्धव्यं ज्ञातव्यमित्यर्थः ।

अत्रोपपत्तिः । प्रागत्रापि खवेदमितेन त्रिगुणशेषेण प्रथमपिण्डमानं लभ्यते तदेष्टत्रिगुणशेषेण किं जाते शेषसम्बन्धि फलं गतपिण्डाभावात् तदेव शीघ्रफलसंबन्धि पिण्डमानम् । एतदनुक्तमपि बुद्धिमता ज्ञायते । आचार्येण बालावबोधार्थं लिखितम् ॥ ४४ ॥

इदानीं विश्वमिते गतपिण्डे विशेषमाह ।

**पिण्डे चतुर्दश विश्वैर्गुणिते नखोद्धृते विकलाः ।**
**लब्धेन विश्वपिण्डो रहितः शेषं फलं भवति ॥ ४५ ॥**

(पिण्डे चतुर्दशैर्ये विश्वविगुणिते नखोद्धृते विकले।) *

चतुर्दशसङ्ख्यक एष्यपिण्डे सति विकले शेषे विश्वविगुणिते त्रयोदशसङ्ख्यकपिण्डेन गुणिते नखे २० हृते यल्लब्धं भवेत् तत्र लब्धेन त्रिशपिण्डस्त्रयोदशसङ्ख्यकः पिण्डो रहितः शेषं फलं शीघ्रफलसम्बन्धि पिण्डमानं भवेत्।

अत्रोपपत्तिः। त्रयोदशचतुर्दशपिण्डयोरन्तरे °$\frac{2}{3}$ केन्द्रान्तरमस्ति। इति पूर्वमेव ४२सूत्रे प्रतिपादितम्। चतुर्दशपिण्डमानं शून्यसमम्। अतोऽनुपातो यदि विंशतिमितेन त्रिगुणाऽपेण विश्वचतुर्दशपिण्डयोरन्तरं त्रिश्वपिण्डसमं लभ्यते तदेष्टशेषेण किं लब्धेन विश्वपिण्डो रहितश्चतुर्दशपिण्डस्याल्पत्वात् शेषं शीघ्रफलसम्बन्धि पिण्डमानं भवेत्॥ ४५॥

इदानीं पिण्डतः शीघ्रफलमाह।

पिण्डफलनवमभागो भागादिफलं ग्रहेषु वा स्वमृणम्।
चलकेन्द्रे मेषादौ तुलादिके कारयेत् क्रमशः॥ ४६॥

पिण्डफलस्य नवमांशो भागादि शीघ्रफलं भवेत्। शेषं स्पष्टार्थम्।

अत्रोपपत्तिः। नवगुणित भागादि शीघ्रफलमेव पिण्डाङ्का पठिता इति ४२सूत्रे प्रतिपादितम्। अतः पिण्डफलं नवहृतं भागादि शीघ्रफलं भवति। धनर्णवासना स्पष्टाधिकारतः स्फुटा॥ ४६॥

इदानीं भौमस्य चतुर्दशपिण्डानाह।

वसुवेदा युगनन्दाः खवेदचन्द्राः समुद्रवसुचन्द्राः।
वसुयमयमा रसनभोरामा नन्दाग्निरामाश्च॥ ४७॥
भोऽब्धिगुणा रसरसरामा विलोचनाब्धिगुणाः।
वसुवसुयमा वसुदिशो नभश्च कुजशीघ्रपिण्डाः स्युः

(वसुवेदा युगनन्दा खवेदचन्द्रा समुद्रवसुचन्द्रा।
वसुयमयमा त्रियमयमास्तथा रसनभोरामा* ॥ ४७॥

---

* अयं पाठः साधुः।

शीघ्र =६९९६" ॥ ६२८६ ॥ ५६४८ ॥ ५०६८ ॥ ४७०६ ॥ ४६३३ ॥
शीघ्रफलज्या =४५ ६५ ॥ ४५ ६५ ॥ ४२ ५७ ॥ ३५ ६० ॥ २४ ०७ ॥ ८ ९५ ॥

शीफ = २२°. ६ ॥ २२° ५ ॥ २०° ८ ॥ १७° ३ ॥ ११° ५ ॥ ३°. ९८ ।

९ × शीफ = २०३ ४ ॥ २०२ ५ ॥ १८७ २ ॥ १५५ ७ ॥ १०३ ५ ॥ ३५ ८२ ॥

आचार्यपिण्डा. = ३३ । ६६ । ९८ । १२८ । १५४ । २०७ । १९४ ।

मत्साधिताः = ३३ । ६६ । ९६ । १२७ । १५४ । १७६ । १९४ ।

आचार्यपिण्डाः = २०४ । २०४ । १८८ । १५७ । १०७ । ३६ । ० *।

मत्साधिता. = २०३ । २०३ । १८७ । १५६ । १०४ । ३६ । ० ।

इदानीं गुरोः पिण्डानाह ।

**धृतिरसगुणाश्च खशराः षट्करसा गजनगा रसाष्टौ च ।**
**खाङ्काश्च भुजगवसवः सागरवसवः समुद्रनगाः ॥ ५१ ॥**
**भुजगशरा रसरामा *रसेन्दवः पिण्डकाः सूरेः ।**
**चक्राद्विशुद्धशेषः स्फुटो भवेत् सिंहिकासूनुः ॥ ५२ ॥**

गुरोः क्रमेण चतुर्दश पिण्डाः = १८ । ३६ । ५० । ६६ । ७८ । ८६ । ९० । ८८ । ८४ । ७४ । ५८ । ३६ । १६ । ० । अत्र महत्तमपिण्डो ९० नवभक्त. परम शीघ्रफलम् = १०° । अस्य ज्यान्त्यफलज्या = २१ खाङ्के मिते व्यासार्धे ।

गणेन नवचन्द्रैरित्यादि३१श्लोकविधिना यः पातः स चक्राद्विशुद्धः शेषः सिंहिकासूनू राहुः स्फुटो भवेदिति ।

अत्रोपपत्तिः । भौमपिण्डसाधनवदत्रापि

केन्द्रज्या = ३७।४०॥ ५३ ।४०॥ ७७ ।००॥ ६६ ।०७ ॥ ९०।०० ॥ ९९८।७० ॥ १९६ । २० ॥
केन्द्रकोटिज्या = ११६।२०॥ १०७।००॥ ८२ ।००॥ ७१।२० ॥ ४७ । २० ॥ ३१ । ०० ॥ ७ । ०० ॥
अन्त्यफलज्या = २१।००॥ २१।००॥ २१।००॥ २१ ।०० ॥ २१ । ०० ॥ २१ । ०० ॥ २१ । ०० ॥
स्वकोटि = १३७ ।२०॥ १२८।००॥ ११३।००॥ ९२। २० ॥ ६८ । २० ॥ ४२ । ०० ॥ १४ । ००॥
शीक = ८४०६' ॥ ८३२८ ॥ ८२०४ ॥ ७६६२ ॥ ७७७० ॥ ७५१५ ॥ ७२१० ॥
शीघ्रज्या = ४ ९५ ॥ ८ १२ ॥ ११ ८२ ॥ १५ १३ ॥ १७ ८३ ॥ १६ ७८ ॥ २० ८३ ॥

* विवर्के खमितिपाठ साधु ।

शीफ = १ ६७ ॥ ३ ८७ ॥ ५ ६२ ॥ ७ ३० ॥ ८ ४८ ॥ ६ ४२ ॥

९ × शीफ = १७ ०३ ॥ ३४ ८३ ॥ ५० ५८ ॥ ६४ ८० ॥ ७६ ३२ ॥ ८४ ७८ ॥ ८८

कन्द्रज्या = ११४। ४० ॥ १०४। ०० ॥ ८७। ०० ॥ ६५। ४० ॥ ४१। ०० ॥ १४। १९

केन्द्रकोटिज्या = ३४। २० ॥ ६० । ०० ॥ ८२। ०० ॥ १००। ०० ॥ ११३। ०० ॥ ११८। ४९

अन्त्यफलज्या = २१। ०० ॥ २१। ०० ॥ २१। ०० ॥ २१। ०० ॥ २१। ०० ॥ २१।

स्पकों = १३। २० ॥ ३६। ०० ॥ ६१। ०० ॥ ७६। ०० ॥ ९२। ०० ॥ ९७। ४९

शीफ = ६६०७ ॥ ६६६४ ॥ ६३५४ ॥ ६१६४ ॥ ६०४४ ॥ ५६७० ॥

शीफज्या = २० ८१ ॥ १६ ६७ ॥ १७ १८ ॥ १३ ४२ ॥ ८ ५३ ॥ ३ ६८ ॥

शीफ = ६ ६२ ॥ ६ १७ ॥ ८ १८ ॥ ६ ३५ ॥ ४ ०७ ॥ १ ४२ ॥

९ × शीफ = ८६ २८ ॥ ८४ ३३ ॥ ७३ ६२ ॥ ५७ १५ ॥ ३६ ६३ ॥ १२ ७८

आचार्यपिण्डा = १८ । ३६ । ५० । ६६ । ६८ । ८६ । ९० ॥

मत्साधिता = १८ । ३५ । ५१ । ६५ । ७६ । ८५ । ८९ ॥

आचार्यपिण्डा = ८८ । ८४ । ७४ । ५८ । ३६ । १८ । ० ॥

मत्साधिता = ८९ । ८४ । ७४ । ५७ । ३७ । १३ । ० ॥ ५१—५२ ॥

इदानीं शुक्रपिण्डानाह ।

खशराः शतं खतिथ्यः सागरनन्देन्दवोऽङ्कजिनाः ।
गुणगुणरामाः कुनगगुणाः शून्यखाम्बुधयः ॥ ५३ ॥
कुञ्जरचन्द्रसमुद्रा गजाभ्रवेदा नभोऽम्बुधिज्वलनाः ।
गगनशिलीमुखचन्द्रा वियच्च पिण्डाः सुरारिगुरोः ॥ ५४ ॥

(खशरा शत खतिथ्यस्तथाङ्कनन्देन्दवोऽङ्कजिना ।
खाङ्कयमा सुररामा कुनगगुणा शून्यखाम्बुधय ॥ ५३ ॥
कुञ्जरचन्द्रसमुद्रा गजाभ्रवेदा नभोऽम्बुधिज्वलना ।
गगनशिलीमुखचन्द्रा वियच्च पिण्डा सुरारिगुरो. ॥ ५४ ॥) *

शुक्रस्य क्रमेण चतुर्दश पिण्डा ५० । १०० । १५० । १९९ । २४६ । २९० । ३३३ । ३७१ । ४०० । ४१८ । ४०८ । ३४० । १५० । ० । अत्र महत्समपिण्डो ४१८ नवभक्त परमफलम् $= \frac{४१८}{९} =$ ४६° । २६′ । ४०″ । अस्य ज्याऽन्त्यफलज्या = ८६ । ४१ स्वार्कमितव्यासार्धे ।

* अयं पाठः साधुः ।

अत्रोपपत्तिः । भौमपिण्डसाधनसद्वासनापि

केन्द्रज्या = २११४० ॥ ५३ । ४० ॥ ७१ । ०० ॥ ८६ । ०० ॥ १०१ । ०० ॥ ११८ । ०० ॥ ११६ । २० ॥
केन्द्रकोटिज्या = ११८ । २० १०७ । ०० ॥ ८३ । ०० ॥ ७१ । २० ॥ ४७ । २० ॥ २१ । ०० ॥ ७ । ०० ॥
अन्त्यफलज्या = ८६ ४१ ॥ ८६ । ४१ ॥ ८६ । ४१ ॥ ८६ । ४१ ॥ ८६ । ४१ ॥ ८६ । ४१ ॥ ८६ । ४१ ॥
स्पष्टकर्णः = २०३ । १ ॥ १९६ । ४१ ॥ १७८ । ४१ ॥ १५८ । १ ॥ १३४ । १ ॥ १०७ । ४१ ॥ ७६ । ४१ ॥
शीफ = १०२६४ ॥ १०७६० ॥ ११६७४ ॥ ११०२४ ॥ १०४०२ ॥ ८५८५ ॥ ८६०६ ॥
शीफज्या = १० ७० ॥ २३ १३ ॥ ३४ ३० ॥ ४५ ०० ॥ ५५ ०० ॥ ६४ ०२ ॥ ७२ ०८ ॥
शीफ = ५° ४७ ॥ ११° ०७ ॥ १६° ६५ ॥ २२° १० ॥ २७° ३७ ॥ ३२° ३७ ॥ ३७° १० ॥
६ × शीफ = ५७ १३ ॥ ६६ ४३ ॥ १४६ ८५ ॥ १६८ ६ ॥ २४६ ३३ ॥ २६१ ३३ ॥ ३३३ ६ ॥
केन्द्रज्या = ११४ ४० ॥ १०४ । ०० ॥ ८७ । ०० ॥ ६५ । ४० ॥ ४१ १०० ॥ १४ । ०० ॥
केन्द्रकोटिज्या = ३४ । ३० ॥ ६० । ०० ॥ ८२ । ०० ॥ १०० । ०० ॥ ११३ । ०० ॥ ११८ । ४० ॥
अन्त्यफलज्या = ८६ । ४१ ॥ ८६ । ४१ ॥ ८६ । ४१ ॥ ८६ । ४१ ॥ ८६ । ४१ ॥ ८६ । ४१ ॥
स्पष्टकर्णः = ५२ । २१ ॥ २६ । ४१ ॥ ४ । ४१ ॥ १३ । १६ ॥ २६ । १६ ॥ ३१ । ५६ ॥
शीफ = ८४४४ ॥ ६४४२ ॥ ५२२७ ॥ ४०५१ ॥ २९२३ ॥ २०९५ ॥
शीफज्या = ७८ ८२ । ८३ ९५ ॥ ८६ ६५ ॥ ८४ २५ ॥ ७२ ९५ ॥ ३४ ७५ ॥
शीफ = ४१° २२ ॥ ४४° ६२ ॥ ४६° ४३ ॥ ४४ ८३ ॥ ३०° ६२ ॥ १६° ८० ॥
९ × शीफ = ३७० ९८ ॥ ४०१ ५८ ॥ ४१७ ८० ॥ ४०३ ४० ॥ ३३८ ५८ ॥ १५१ ८३ ॥
आचार्यपिण्डाः = ५० । १०० । १५० । १९९ । २४८ । २९० । ३३३ ॥
मत्साधिताः = ५० । १०० । १५० । १९९ । २४६ । २९१ । ३३४ ॥
आचार्यपिण्डाः = ३७१ । ४०० । ४१८ । ४०८ । ३४० । १५० । ० ॥
मत्साधिताः = ३७१ । ४०२ । ४१८ । ४०४ । ३३९ । १५२ । ० ॥

यथा महदन्तरं न भवेत्तथाऽऽदर्शीयं मया शोधिते षष्ठपिण्डतुल्ये च पूर्णाङ्कतेति ॥ ५३–५४ ॥

इदानीं शनिपिण्डानाह ।

रुद्रा द्वियमाः कुगुणा वसुरामाः सागराम्बुनिधयश्च ।
वसुवेदा गजवेदाः षडब्धयो लोचनाम्बुधयः ॥ ५५ ॥
पञ्चगुणाः सप्तयमा रसचन्द्राः षट् नभश्च रविसूनोः ।

शनेः क्रमेण चतुर्दश पिण्डाः = ११ । २२ । ३१ । ३८ । ४४ । ४८ । ४८ । ४६ । ४२ । ३५ । २७ । १६ । ६ । ० । अत्र महत्तमपिण्डो ४८

मध्यमभुक्तिकलाः स्युः

षड्वि २६ रदाः ३२ खं वसु ८ *शका ११ विकलाः ।

मन्दगुणिता भुक्तिः

खखनवविहृता भुक्तिः स्यात् ॥ ५७ ॥

( मन्दत्रिगुणिता भुक्ति खखनवविहृता स्वभुक्तेः स्यात् ॥ ५८ ॥ )†

ग्रहवत् तन्मन्दफलं मृदुकेन्द्रवशात् स्वमृणं तदूनां च ।

भौमादीनां मध्यमा गतिकला. क्रमेण भौ ३१। बुधौ २४५ । गु ५ । शुक्री ९६ । श २ । रा ३ । कलानामध एता विकलाश्च भौ २६ । बुधौ ३२ । गु० । शुक्री ८ । श ० । रा ११ ॥ भुक्तिर्भौमादीनां मृदुकेन्द्र गतिर्मन्दोच्चानामत्यल्पगतित्वाद्ग्रहमध्यगतिरेव मन्दत्रिगुणिता मन्दभोग्यखण्डेन त्रिगुणिता खखनवै ९०० हृता फलमद्यतनश्वस्तनमन्दकेन्द्रयोरन्तरं स्यात् । इदमन्तरमेव केन्द्रज्या प्रकल्प्य ग्रहवत् ३८–३९ सूत्रतस्तन्मन्दफलं साध्यं तच्च भुक्ते फलं मृदुगतिफलं भवति । तच्च स्वमृदुकेन्द्रवशात् कुलीरादौ केन्द्रे धनं मकरादावृणं कार्यं मध्यमगतौ । एवं मन्दस्पष्टा गतिः स्यात् । तदूना शीघ्रगतिः शीघ्रोच्चगतिमित्यर्थः सम्बन्धः ॥

अत्रोपपत्तिः । एवमन्दगतिफलसाधनवत् स्फुटा ॥ ५६–५७½ ॥

इदानीं शीघ्रगतिफलमाह ।

शीघ्रगतिं सङ्गुणये-

देवं शीघ्रस्य खण्डेन ॥ ५८ ॥

पिण्डान्तरेण खार्कै- १२०

र्लिप्तार्थं स्यात् फलं गतेः शीघ्रम् ।

स्वमृणं क्रमोत्क्रमविधौ

‡चतुर्दश विधिश्च पिण्डको गुणकः ॥ ५९ ॥

---

* गजाभ्रिविवर्विकला –इति पाठ साधु ।

† अयं पाठ साधु ।

‡ चतुर्दशो विश्वपिण्डको गुणक –इति पाठ साधु ।

अत्रोपपत्तिस्त्रैराशिकेन स्फुटा ॥ ६२ ॥

**गतिपादं पादोनां गतिं विशोध्यास्तकाल उदये च ।**
**संसाधितस्य तस्य ग्रहस्य चरकर्म चान्यस्य ॥ ६३ ॥**

निशीथकालिकग्रहे गतिचतुर्थांशं चतुर्थांशोनां गतिं च विशोध्य क्रमेणास्तकाले उदये च ग्रहो भवति । एवं तस्य रवेर्वाऽन्यस्य ग्रहस्य समाधितस्य मध्ये चरकर्म कार्यम् । अस्ते उदये वा ग्रहे चरकर्म देयं न दिनार्धे निशीथे चेति स्फुटं सिद्धान्तविदामिति ॥ ६३ ॥

**चरदलविनाडिकागति-**
**कलावधात् खखरसाग्नि ३६०० लब्धकलाः ।**
**ऋणमुदयेऽस्तमये धन-**
**मुत्तरगोलेऽन्यथा याम्ये ॥ ६४ ॥**

स्पष्टार्थम् । उपपत्तिश्च 'चरघ्नभुक्तिर्द्युनिशासुभक्ते'त्यादिना भास्करोक्तेन स्फुटा ॥ ६४ ॥

**पञ्चदश हीनयुक्ताश्चरार्धनाडीभिरुत्तरे गोले ।**
**याम्ये युक्तविहीना द्विसङ्गुणा रात्रिदिननाड्यः ॥ ६५ ॥**

स्पष्टार्थम् । उपपत्तिश्च 'चरघटीसहिता रहिता क्रमात् तिथि मिता घटिका खलु गोलयो'रित्यादिना भास्करविधिना स्फुटा ॥ ६५ ॥

**मिश्रेष्टान्तरगुणिता भुक्तिर्दिवसे निशादले प्रथमे ।**
**षष्ट्या विभज्य लब्धं विशोध्य तात्कालिको भवति ॥ ६६ ॥**

दिवसे दिनेष्टकाले वा प्रथमे निशादले निशीथतोऽर्वाक् स्वेष्टकाले मिश्रस्य रात्र्यर्धकालस्य स्वेष्टकालस्य च यदन्तरं तेन भुक्तिर्ग्रहगतिर्गुणिता फलं षष्ट्या विभज्य लब्धं निशीथकालिकग्रहाद्विशोध्य शेषं तात्कालिको ग्रहो भवति । एवं निशीथानन्तरेष्टकाले लब्धं निशीथकालिकग्रहे संयोज्य तात्कालिकग्रहः कार्य इत्यनुक्तमपि बुद्धिमता ज्ञायत इति ।

अत्रोपपत्तिस्त्रैराशिकेन स्फुटा ॥ ६६ ॥)

क्रान्त्ययुतिवियोगादक्षपदैः शोधिते दिनदले भा ।
भाश्रुतिकृत्योः कृतमनुयुतोनयाकृत्वकर्षः स्यात् ॥ ६७ ॥

(क्रान्त्यक्षयुतिवियोगात्स्वक्रपदात शोधिते दिनदले भा ।
भाश्रुतिकृत्योः कृतमनुयुतोनयोः कृतिकर्षस्य ॥)*

क्रान्त्यक्षयोर्युतिवियोगात् त्रिप्रश्नोक्त्या मध्यनतांशाः साध्याः । नतांशमाने चक्रपदावत्ते. शोधिते शङ्कुचापमाने विदिते सति त्रिप्रश्नाधिकारविधिना शङ्कुना मध्यनतांशज्या तदा द्वादशाङ्गुलशङ्कुना किमित्यनुपातेन दिनदले मध्याह्ने भा छाया साध्या । छायाकर्णकृत्योः कृत मनुयुतोनयोः सत्योरकर्षस्यापरस्य कृति. क्रमेण भवति । छायाकृति. कृतमनु १४४ युता छायाकर्णकृतिस्तया छायाकर्णकृतिः कृतमनु–१४४ भिन्ना छायाकृतिर्भवतीत्यर्थः ।

अत्रोपपत्तिः । त्रिप्रश्नाधिकारविधिना स्फुटा ॥ ६७ ॥

इदानीमिष्टकाले स्थूल छायाकर्णमाह ।

षड्गुणिता गतशेषा नाड्यो दिवस विभाजिताप्याततः ।
दिनदलकर्मगुणाः स्वानया त्रिभज्याभक्तं फलं कर्णः ॥६८॥

(षड्गुणिता गतशेषा नाड्यो दिवसार्धभाजिता तज्ज्या ।
दिनदलकर्णगुणाऽप्तानया त्रिभज्या फल कर्ण. ॥)†

गतशेषा नाड्य उन्नतकाल । षड्गुणिता दिनार्धभाजिता यत् फल स्यात् तत्सख्यया ज्या साध्या । यल्लब्ध तत्सख्यकाना १५ सूत्रे लिखितानां ज्याखण्डानां योग कार्यं सा ज्या भवतीत्यर्थः । एवमिय ज्या स्थूलेष्टान्त्या ज्ञातव्येति । त्रिभज्या दिनार्धकर्णेन गुणाऽनया पूर्वसाधितया स्थूलेष्टान्त्याऽऽप्ता फल स्थूल इष्टकाले छायाकर्णो भवतीति ।

अत्रोपपत्तिः । यदि दिनदलोन्नतकालेन नवतिभागास्तदेष्टोन्नतकालेन किं लब्धा भागा. षष्टिगुणा. कलास्ता' खनवेशै ९०० हृता लब्धा

* अयं पाठ' साधु ।
† अयं पाठ' साधु' ।

$= \frac{\text{१० उफा} \times \text{६०}}{\text{दिद} \times \text{६००}} = \frac{\text{६ उफा}}{\text{दिद}}$ । लघ्वसख्यकाना ज्याखण्डाना योग स्थूले-ष्टान्त्या जाता । ततो यदि दिनार्धान्त्यया स्थूलतया त्रिज्यासमधा दि-नार्धकर्णो लभ्यते तदेष्टान्त्यया कि व्यस्तानुपातेन जात इष्टकर्ण

$= \frac{\text{दिक} \times \text{त्रि}}{\text{इ अ}}$ । अत उपपन्नम ॥ ६८ ॥

इदानीमिष्टकर्णात उन्नतकालमाह ।

**दिनदलकर्णे त्रिभ*ज्यागुणे श्रवणोद्धृते फलस्य धनुः ।**
**द्युदलगुणं तिथिभक्तं दिनगतशेषासवः क्रमशः ॥ ६९ ॥**

धनुर्दिनार्धगुण पञ्चदशभक्त फल क्रमश पूर्वापरकपालयोर्दिनगत-शेषासवो भवन्ति । शेष स्पष्टार्थम ।

अत्रोपपत्ति । पूर्वप्रकारवैपरीत्येन

धनु $= \frac{\text{१०} \times \text{६०} \times \text{उफा}}{\text{दिद}}$ । अतो घट्यात्मक उन्नतकाल

$= \frac{\text{दिद} \times \text{ध}}{\text{१०} \times \text{६०}}$ । अथ ३६० गुणो जातोऽस्वात्मक उन्नतकाल

$= \frac{\text{दिद} \times \text{ध}}{\text{१५}}$ । अत उपपन्नम ॥ ६९ ॥

इदानीं ज्यातश्चापानयनमाह ।

**ज्याखण्डोने शेषे गुणिते नवभिः शतैरशुद्धहृते ।**
**क्षेप्याणि शुद्धखण्डैर्गुणितानि शतानि नव चापम् ॥ ७० ॥**

ज्यामाने ज्याखण्डै १५ सूत्र पठितैरूने शेषे नवशतैर्गुणितेऽशुद्ध-खण्डहृते लब्धौ शुद्धखण्डे शुद्धखण्डसंख्याभिर्गुणितानि नवशतानि क्षेप्या-णि तदा चाप भवति ।

अत्रोपपत्ति । ज्यानयनवैपरीत्येन सुगमा ॥ ७० ॥

इदानीमुपसंहारमाह ।

**इति तिथिनक्षत्रदिनच्छायादिकसिद्धौ ब्रह्मगुप्तेन ।**
**आसप्तत्यार्याणां संक्षिप्तोऽतिस्फुटश्चैषः ॥ ७१ ॥**

* त्रिज्याभिहते इति पाठः साधु ।

स्पष्टार्थम् ॥ ७१ ॥

इदानीमयं कस्मै न दातव्य इत्याह ।

दुर्जनकृतघ्नशठप्रतिकञ्चुककारिणे न दातव्यः ।
ध्यानग्रहाधिकारो जिष्णुसुतब्रह्मगुप्तकृतः ॥ ७२ ॥

इति श्रीब्रह्मगुप्तकृतो ध्यानग्रहोपदेशाध्यायः समाप्तः ।

प्रतिकञ्चुककारी पिशुनः । शेषं स्पष्टम् ॥ ७२ ॥

मधुसूदनसूनुनोदितो यस्तिलकः श्रीपृथुनेह जिष्णुजोक्ते ।
हृदि तं विनिधाय नूतनोऽयं रचितो ध्यानखगे सुधाकरेण ॥ १ ॥

अपहाय दशावतारलीला प्रकृतिर्यामकलाममलङ्करोति ।
परिहाय सुपात्रमत्र लोकाः सकलाः सङ्कलयन्ति को कुपात्रम् ॥ २ ॥

या ब्रह्मगुप्तकृतिरत्र सहस्रसूत्रै-
र्नानाप्रकारकरणेन च भास्करेण ।
मन्दीकृता पृथुशर्यातिलकेन सेयं
विद्योतिता निजकरेण सुधाकरेण ॥ ३ ॥

ये भास्करादिकृतिपारगता नवीने
चापप्रपञ्चनविधौ कुशलाः सुशीलाः ।
श्रीमत्सुधाकरकृतं तिलकं निधाय
सज्ज्योतिषेऽत्र विहरन्तु त एव धीराः ॥ ४ ॥

कृपालुसूनुना सुधाकरद्विवेदिना सुतं
परात्परं निधाय मानसे सुकोशलापतेः ।
गजेषुनन्दभूमिहायने मघौ सिते गुरौ
सुरामजन्मसत्तिथावकारि सोपपत्तिका ॥ ५ ॥

सन् १९०१ मार्चमासस्याष्टाविंशतितिदिने श्रीजानकीरमण-
चरणसरोजरजःप्रसादेनायं तिलकः सम्पूर्णतामगात् ।

इति श्रीकृपालुदत्तसूनुसुधाकरद्विवेदिविरचितो ब्रह्मगुप्तकृतध्यान-
ग्रहोपदेशाध्यायतिलकः समाप्तः ॥

५४०
१०८४
७६७
४७१६
१३१
(३) ———
४७१६
१४१५७
४७१६
———
६१८१ ८६ ( ४७ = क्षेपकः
४७१
१३३८९ = शेषम् ।

* लब्धिः = १३७०१० । गुणः = ५३११ । अनयोर्घातः-
१३७०१०
१३७०१
४११०३
६८५०५
———
७२७६६०११० = कल्पारम्भे गता अधिमासाः ।
१३७५ = कल्पारम्भात् ग्रन्थारम्भशकावधि गता अधिमासाः ।
———
७२७६६१४८५ = कल्पादितो ग्रन्थारम्भशकावधि गता अधिमासाः ।

४ श्लो॰ क्षेपसाधनम्—

पूर्वसाधिताः कल्पगताब्दाः १९७२९४७७२९ मासीकृताः २३६७५३७२७४८ पूर्वसाधितैः ७२७६६१४८५ अधिमासैर्युता जाताश्चान्द्रमासाः = २४४०३०३४२३३ । कल्पचान्द्रमासैः कल्पकुदिनानि लभ्यन्ते तदैभिः किमिति जातो वर्षारम्भसमीपस्थमध्यमदर्शान्तकालिकः कुदिनगणः

$$= \frac{२४४०३०३४२३३ \times १५७७९१६४५००००}{५३४३३३००००००} = \frac{२४४०३०३४२३३ \times १०५१९४४३}{३५६२२२} ।$$

सप्तगुणितहरेण २४९३५५४ नेन गुण्यगुणकयोस्तक्षणाय न्यासः—

२४९३५५४ ) २४४०३०३४,२३३ ( ९७८६
२२४४१९८६
———
१९६१०४८२
१७४५४८७८
———
२१५५६०४३

१०५१९४४३ ( ४
९९७४२१६
———
५४५२२७ = गुणकशेषम्

६ श्लोकक्षेपसाधनम् ।

पूर्वसाधिताः कल्पगताब्दाः = १९७२९४४०२९ । एते द्वादशगुणिता जाताः सौरमासाः = २३६७५३२८३४८ । इष्टशाका — ५५० रम्भे गताधिमासाः = १३७०१० × ५३११ + १३०५ = ७२७७०५८८५ *

इष्टचान्द्रमासाः = २३६७५३२८३४८ + ७२७७०५८८५ = २४४०३०३४२३३

कल्पचान्द्रमासैः कल्पचन्द्रमन्दकेन्द्रभगणाः कल्पचान्द्रमासैर्ना लभ्यन्ते तदैभिः क इति जातं भगणात्मकं चन्द्रकेन्द्रम् = $\frac{२४४०३०३४२३३ \times ३८३१८९४१४२}{५३४३३३००००० }$

| | | | |
|---|---|---|---|
| १ | २४४०३०३४२३३ | १ | ५३४३३३ |
| २ | ४८८०६०६८४६६ | २ | १०६८६६६ |
| ३ | ७३२०९१०२६९९ | ३ | १६०२९९९ |
| ४ | ९७६१२१३६९३२ | ५ | २६७१६६५ |
| ८ | १९५२२४२७३८६४ | ६ | ३२०५९९८ |
| ९ | २१९६२७३०८०९७ | ७ | ३७४०३३१ |
| | | ८ | ४२७४६६४ |
| | | ९ | ४८०८९९७ |

४८८०६०६८४६६
९७६१२१३६९३२
२४४०३०३४२३३
९७६१२१३६९३२
२१९६२७३०८०९७
१९५२२४२७३८६४
२४४०३०३४२३३
७३२०९१०२६९९
१९५२२४२७३८६४
७३२०९१०२६९९

५३४३३३००००० ) ९३५०९८४३९२४४५८१६३०८६ ( १७५००२९३६२
५३४३३३
४००७६५४
३७४०३३१
२६७३२३३
२६७१६६५
१५६८८२४

* २ श्लोकक्षेपसाधन द्रष्टव्यम् ।

